11075CH05

पञ्चमः पाठः

# वीरः सर्वदमनः

प्रस्तुत पाठ कविकुलगुरु महाकवि कालिदास की अमर कृति जगत् प्रसिद्ध "अभिज्ञानशाकुन्तलम्" नाटक के सप्तम अङ्क से लिया गया है। इस नाटक की मूल कथा महाभारत के शाकुन्तलोपाख्यानम् से ली गई है। इस नाटक में राजा दुष्यन्त शकुन्तला से गान्धर्व विवाह करता है पर दुर्वासा ऋषि के शाप के कारण उसे भूल जाता है। उसके द्वारा ठुकराई गई शकुन्तला अपने पुत्र सर्वदमन के साथ महर्षि मरीचि के आश्रम में रह रही है। देवासुर संग्राम में विजय प्राप्त कर लौटते हुए दुष्यन्त मार्ग में मारीच ऋषि के आश्रम में विश्राम हेतु आते हैं वहीं पर उन्हें पुत्र एवं शकुन्तला की प्राप्ति होती है। रक्त का सम्बन्ध दुष्यन्त एवं सर्वदमन को मिलाता है। बालक सर्वदमन का शौर्यपूर्ण शैशव यहाँ चित्रित किया गया है।

**दुष्यन्तः** – (*निमित्तं सूचयित्वा*)

**मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा।**
**पूर्वावधीरितं श्रेयो दुःखाय परिवर्तते ॥1॥**

(*नेपथ्ये*)

**मा खलु चापलं कुरु। कथं गत एवात्मनः प्रकृतिम्?**

**दुष्यन्तः** – (*कर्णं दत्त्वा*)

**अभूमिरियमविनयस्य। को नु खल्वेष निषिध्यते।** (*शब्दानुसारेणावलोक्य सविस्मयम्*) **अये, को नु खल्वयम् अनुबध्यमानस्तपस्विनीभ्याम् अबालसत्त्वो बालः।**

**अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम्।**
**प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति॥2॥**

बालः – जृम्भस्व सिंह! दन्तास्ते गणयिष्ये।

प्रथमा – अविनीत! किं नोऽपत्यनिर्विशेषाणि षत्त्वानि विप्रकरोषि? हन्त। वर्धते ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि।

दुष्यन्तः – किं न खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मे मनः? नूनमनपत्यता मां वत्सलयति।

द्वितीया – एषा खलु केसरिणी त्वां लङ्घयिष्यति यद्यस्याः पुत्रकं न मुञ्चसि।

बालः – (*सस्मितम्*) अहो बलीयः खलु भीतोऽस्मि। (*इत्यधरं दर्शयति*)।

प्रथमा – वत्स! एनं बालमृगेन्द्रं मुञ्च, अपरं ते क्रीडनकं दास्यामि।

बालः – कुत्र, देहि तत् (*इति हस्तं प्रसारयति*)

द्वितीया – सुव्रते! न शक्य एष वाचामात्रेण विरमयितुम्। गच्छ त्वम्। मदीये उटजे मृत्तिकामयूरस्तिष्ठति। तमस्योपहर।

**बालः** – **अनेनैव तावत् क्रीडिष्यामि।** (*इति तापसीं विलोक्य हसति*)।

**तापसी** – **भवतु। न मामयं गणयति** (*राजानमवलोक्य*) **भद्रमुख! मोचयानेन बाध्यमानं बालमृगेन्द्रम्।**

**दुष्यन्तः** – **आकारसदृशं चेष्टितमेवास्य कथयति।** (*आत्मगतम्*)

**अनेन कस्यापि कुलाङ्कुरेण**
**स्पृष्टस्य गात्रेषु सुखं ममैवम्।**
**कां निर्वृत्तिं चेतसि तस्य कुर्याद्**
**यस्यायमङ्कात् कृतिनः प्ररूढः॥3॥**

(*बालमुपलालयन्*) **प्रकाशम्**

**दुष्यन्तः** – **अथ कोऽस्य व्यपदेशः?**

**तापसी** – **पुरुवंशः।**

**दुष्यन्तः** – (*आत्मगतम्*) **कथमेकान्वयो मम?** (*प्रविश्य*)

**तापसी** – **वत्स सर्वदमन! शकुन्तलावण्यं प्रेक्षस्व।**

**बालः** – **कुत्र वा ममाम्बा?**

**दुष्यन्तः** – (*आत्मगतम्*) **किं वा शकुन्तलेत्यस्य मातुराख्या?**

**बालः** – **रोचते मे एष मयूरः।** (*इति क्रीडनकमादत्ते*)

## शब्दार्थाः टिप्पण्यश्च

**नाशंसे** – न + आशंसे, संभावना नहीं करता हूँ।
**स्पन्दसे** – फड़कती हो।
**वृथा** – बेकार।
**पूर्वावधीरितं** – पूर्वम् अवधीरितम् (कर्मधा० स०) पहले से त्यागा हुआ।
**आत्मनः** – स्वयं की।
**प्रकृतिम्** – प्र + कृ + क्तिन् द्वि० ए० व०, स्वभाव को ।
**निषिध्यते** – नि + सिध् + कर्मवाच्य लट् प्र० पु० ए० व०, रोका जाता है।
**अनुबध्यमानः** – रोका जाता हुआ।

**अबालसत्त्वो बालः** – बालस्य सत्त्वम् इव सत्त्वं यस्य स बालसत्त्वः, न बालसत्त्व इति अबालसत्त्वः, जिसका प्रताप बच्चों जैसा न हो बड़े जैसा हो (महान् शूर)।

**जृम्भस्व** – जम्भाई लो।

**अपत्यनिर्विशेषाणि** – अपत्यैः निर्विशेषाणि, संतान जैसे।

**सत्त्वानि** – प्राणियों को।

**विप्रकरोषि** – कष्ट दे रहे हो।

**संरम्भः** – हठ/क्रोध।

**कृतनामधेयोऽसि** – नामकरण किया गया है।

**औरस** – आत्मीय।

**स्निह्यति** – स्नेह करता है।

**अनपत्यता** – न अपत्यता, नञ् तत्पुरुष, निःसन्तानता।

**वत्सलयति** – वत्सलं करोति (नामधातु) लट् पु० प्र० ए० व०, स्नेह से युक्त बनाता है।

**क्रीडनकम्** – खिलौना।

**वाचामात्रेण** – कहने मात्र से।

**विरमयितुम्** – रोकने के लिए।

**उपहर** – दे दो।

**आकारसदृशम्** – आकारेण सदृशम् (तृ० तत्पु०), आकार के समान।

**चेष्टितमेवास्य** – इसकी चेष्टा ही।

**आत्मगतम्** – मन ही मन।

**निर्वृत्तिम्** – आनन्द।

**कृतिनः** – कृत + णिनि, षष्ठी ए० व०, बनाने वाले।

**प्ररूढः** – प्र + रुह् + क्त, प्र० पु० ए० व०, उत्पन्न हुआ है।

**व्यपदेशः** – वंश।

**एकान्वयः** – एक एव अन्वयः यस्य सः, बहु० स०, एक ही वंश का।

**शकुन्तलावण्यम्** – शकुन्तस्य लावण्यम् ष० तत्पु०, पक्षी की सुन्दरता।

## अभ्यासः

**1. संस्कृतभाषया उत्तरं देयम्**

(क) कस्य कवेः कस्मात् पुस्तकाद् गृहीतोऽयं पाठः?

(ख) बालः कीदृशं सिंहशिशुं कर्षति स्म?

(ग) तापसी बालाय क्रीडार्थं किं दत्तवती?

(घ) क्रीडापरस्य बालस्य मातुः किं नामधेयम्?

(ङ) बालाय किं रोचते?

**2. रिक्तस्थानानां पूर्तिः करणीया**

(क) अपत्यनिर्विशेषाणि ........................ विप्रकरोषि।
(ख) पुत्रे स्निह्यति मे ........................ ।
(ग) यद्यस्याः ........................ न मुञ्चसि।
(घ) अपरं क्रीडनकं ते ........................ ।
(ङ) ........................ चेष्टितमेवास्य कथयति।

**3. निम्नाङ्कितेषु सन्धिच्छेदो विधेयः**

गत एवात्मनः, औरस इव, दन्तास्ते, यद्यस्याः, शकुन्तलेत्यस्य, खल्वयम्, बालेऽस्मिन्, भीतोऽस्मि, कस्यापि, एकान्वयः, एवास्य, तमस्योपहर, मैवम्, इत्यधरम्, ममाम्बा, अनेनैव।

**4. अधोलिखितेषु विग्रहं कृत्वा समासनाम लिखत**

पूर्वावधीरितम्, अभूमिः, अविनयस्य, शब्दानुसारेण, सविस्मयम्, अबालसत्त्वः, सिंहशिशुम्, अनपत्यता, सस्मितम्, मृत्तिकामयूरः, बालमृगेन्द्रम्, एकान्वयः, आकारसदृशम्, बालस्पर्शम्।

**5. अधोलिखितानां पदानां संस्कृतवाक्येषु प्रयोगः करणीयः**

सविस्मयम्, कर्षति, स्निह्यति, केसरिणी, उटजे, व्यपदेशः, प्रेक्षस्व, ममाम्बा।

**6. प्रकृतिप्रत्ययपरिचयो देयः**

सूचयित्वा, प्रक्रीडितुम्, अवलोक्य, अनुबध्यमानः, निष्क्रान्ता, उपलभ्य, उपलालयन्।

**7. स्वमातृभाषया सप्रसङ्गं व्याख्यायताम्**

(क) मनोरथाय नाशंसे ........................ दुःखाय परिवर्तते।
(ख) अर्धपीतस्तनं ........................ बलात्कारेण कर्षति।
(ग) किं न खलु बालेऽस्मिन् ........................ मां वत्सलयति।

**8. स्वमातृभाषया आशयं स्पष्टीकुरुत**

अनेन कस्यापि कुलाङ्कुरेण ........................ यस्यायमङ्कात् कृतिनः प्ररूढः।।

**नाटके समागतानां पारिभाषिकशब्दानां विवेचनम्–**

**1. अङ्कः**

अङ्क इति रूढिशब्दो भावैः रसैश्च रोहयत्यर्थान्
नानाविधानयुक्तो यस्मात् तस्माद् भवेदङ्कः।।

यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदाऽवगन्तव्यः।। (*नाट्यशास्त्रम् 20/14-16*)
संस्कृतनाटकेषु पञ्च प्रभृति दश पर्यन्तम् अङ्काः भवन्ति। एकस्मिन्नङ्के प्रायशः कथायाः भागः पूर्णतामेति अङ्कस्य समाप्तौ रङ्गमञ्चतः सर्वाणि पात्राणि निर्गच्छन्ति।

**2. नेपथ्यम्**

कुशीलवकुटुम्बस्य गृहं नेपथ्यमुच्यते।
यत्राभिनेतारः नाटकानुरूपं वेशं धारयन्ति तत्स्थानं नेपथ्यमिति कथ्यते।

**3. आत्मगतम्**

अश्राव्यं खलु यद्वस्तु तदिहात्मगतं मतम्।
यदा कश्चिदभिनेता स्वं प्रति (मनसि) वार्तां करोति
अपरान् जनान् स्ववार्तां श्रावयितुं न वाञ्छति तदा
संवादोऽयं स्वगतम्, आत्मगतमि' ति वोच्यते।